॥ अञ्जनशैलनाथस्तोत्रम् ॥

पुलकिनि भुजमध्ये पूजयन्तं पुरन्ध्रीं
भुवननयनपुण्यं पूरिताशेषकामम् ।
पुनरपि वृषशैले फुल्लनीलोत्पलाभं
पुरुषमनुभवेयं पुण्डरीकायताक्षम् ॥ १॥

आजानसौहृदमपारकृपामृताब्धिं
अव्याजवत्सलमवेलसुशीलमाद्यम् ।
आनन्दराशिमनुरागमयावरोधं
आराधयामि हरिमञ्जनशैलनाथम् ॥ २॥

आताम्रपादमवदातसुवर्णचेलं
आपीनबाहुशिखरोज्ज्वलशङ्खचक्रम् ।
आविस्स्मिताननममन्ददयाकटाक्षं
आराधयामि हरिमञ्जनशैलनाथम् ॥ ३॥

अप्राकृतावयवसंहितसंनिवेशं
आरूढयौवनमहीनकुमारभावम् ।
अम्लानकान्तिमतिवाङ्मनसानुभावं
आराधयामि हरिमञ्जनशैलनाथम् ॥ ४॥

आशावकाशसमुदित्वरसर्वगन्धं
आस्वादयत्सुगमसर्वरसस्वभावम् ।
आश्लेषगम्यसुखसंस्पृशनातिरेकं
आराधयामि हरिमञ्जनशैलनाथम् ॥ ५॥

आदर्शयन्तमतिसंकुचिताक्षिशक्तिं
आश्रावयन्तमखिलान् बधिरान् प्रकृत्या ।
आभाषयन्तमभितो नतमूकवर्गं
आराधयामि हरिमञ्जनशैलनाथम् ॥ ६॥

आधावयन्तमतिमारुतमेव पङ्गून्
आजानुलम्बिभुजयन्तमहो कुबाहून् ।
अन्यांश्च कृतशिरसः प्रतिजीवयन्तं
आराधयामि हरिमञ्जनशैलनाथम् ॥ ७॥

आजन्मनिर्धनजनानलकेशयन्तं

अज्ञानपि त्रिदशदेशिकदेश्ययन्तम् ।
अह्राय वन्ध्यमपि मर्त्यमवन्ध्ययन्तं
आराधयामि हरिमञ्जनशैलनाथम् ॥ ८॥

आबद्धकङ्कणमशेषशरण्यतायां
आपत्सहायमपराधसहं नतानाम् ।
आसन्नसामगसुखालससूरिवर्गं
आराधयामि हरिमञ्जनशैलनाथम् ॥ ९॥

अध्यासितासनसरोजसनूपुराङ् घ्रिं
आमुक्तवीरकटकायतवृत्तजङ्घम् ।
आश्चर्यजानुयुगमप्रतिमोरुकाण्डं
आराधयामि हरिमञ्जनशैलनाथम् ॥ १०॥

आवर्तिनिम्ननिखिलाण्डनिदाननाभिं
आयामिदोर्विवरकेलिगृहावरोधम् ।
आबद्धरत्नमयभूषभुजाचतुष्कं
आराधयामि हरिमञ्जनशैलनाथम् ॥ ११॥

अंसावलम्बिमणिकुण्डलकान्तगण्डं
आविस्स्मितांशुमधुराधरबन्धुजीवम् ।
आस्याब्जसौरभसमुत्सुकदीर्घनासं
आराधयामि हरिमञ्जनशैलनाथम् ॥ १२॥

अर्धेन्दुभास्वदलिकोल्लसदूर्ध्वपुण्ड्रं
आलोलनीलकुटिलालकचारुवक्त्रम् ।
आविर्मयूखमणिचूडमहाकिरीटं
आराधयामि हरिमञ्जनशैलनाथम् ॥ १३॥

वादिभीतिकरार्येण रचिता भावबन्ध तः
शोभते वेङ्कटाद्रीशविषया स्तुतिरद्भुता ॥
॥ इति अञ्जनशैलनाथस्तोत्रं संपूर्णम् ॥